श्रीः

# ॥ रामकृष्णाख्यम् ॥

---

## विलोमकाव्यम्

दैवज्ञसूर्यसूरिकृतम्

तत्कृतटीकासंवलितम्

बाबू कवलेश्वरसिंहस्याज्ञानुसारेण

मुंबय्यां

वर्णे मुद्रयित्वा

प्रकाशितम्।



---

*BENARES* ;
AMAR PRESS.
1890.

# श्रीरामकृष्णकाव्यम्

तं भूसुतामुक्तिमुदारहासम् वंदे यतो भव्यभवं दयाश्रीः ॥ श्रीयादवं भव्य भतोयदेवम् संहारदामुक्तिमुतासुभूतम् ॥ १ ॥ ॥ ॥ ॥

अथ ययोः कथाप्रसंगस्तावेवेष्टदेवतात्वेन प्रणमति ॥ तंभूसुतेति ॥ तंभूसुतामुक्तिं वन्दे ॥ भूसुतायाः रावणरक्षितायाःसीतायाःमुक्तिर्मोक्षणंयस्मात् तंराघवंवंदे नमस्करोमीत्यर्थः किंभूतम् उदारहासं उदारः गंभीरःहासोयस्यासौ तथा उद्वेगनिमित्तेषु सर्वानर्थेषुप्राप्तेष्वपि अनुद्विग्नमित्यर्थः पुनः किंभूतम् भव्यभवम् भव्यःपवित्रः भवोऽवतारोयस्यासौतथा अथकथ

म् यतोदयाश्रीश्चबभूवेत्यध्याहारः दयाभूनद
याश्रीश्चशोभाचतयोर्निदानमित्यर्थः एतद्रामप
क्षे॥कृष्णपक्षेतु॥ श्रीयादवंवंदे किंभूतम् भव्यभ
तोयदेवम् भव्याउत्तमाभादीप्तिर्यस्यासौसूर्यः
तथा तोयशब्देनचन्द्रः जलात्मकत्वात् तयोर्द्यो
तनाद्देवः सूर्याचन्द्रमसोरपि प्रकाशकइन्यर्थः
तदुक्तम् यदादित्यगतन्तेजो जगद्भासयतेऽखिल
म् यच्चन्द्रमसियच्चाग्नौतत्तेजोविद्धिमामकम् अ
थकिंभूतंयादवम् संहारदामुक्तिम् संहारोऽनर्थ
स्तन्ददातीति तथाविधापूतनातस्याः मुक्तिर्मो
क्षोयस्मात्ससतथातम् पुनःकिंभूतम् उतप्रत्युत
असुभूतम् सर्वत्रप्राणरूपेणावस्थितमित्यर्थः ।
अथवा प्राणनंजीवनंतद्रूपंचैतन्यस्वरूपम् तदु
क्तम् अहमात्मागुडाकेशसर्वभूताशयस्थित इ
त्यादि पूतनायैमुक्तिन्दातुं अन्तर्यामित्वेन स्व

यमेव प्रेरकोभूदित्युक्तम् इन्द्रवज्रावृत्तमिदम्
तल्लक्षणं स्यादिन्द्रवज्रायदितौजगौग: ॥ १ ॥

चिरं विरंचिर्न चिरं विरंचिः साकारता
सत्यसतारका सा ॥ साकारता सत्य
सतारका सा चिरं विरंचिर्न चिरं वि
रंचिः ॥ २ ॥

ननुदेहवतोऽपि रामादेःकथमन्तर्यामित्वमित्या
शङ्क्य तुल्याक्षरयेन्द्रवज्रयाह चिरंविरंचिरिति
विरंचिर्ब्रह्मा।द्विपरार्धावसानं यावत्सर्वभूतापेक्ष
या चिरन्तिष्ठतीतिप्रथमं अपरंतु आब्रह्म भुव
नाल्लोकाःपुनरावर्त्तिनइति श्रवणान्नचिरंविरं
चिरितिज्ञायते तस्यायुषःपरिमितत्वात् अथसा
कारतासत्यसतारकास्तिसेतितच्छब्देन रामस्य
यासाकारतासत्यसतारका तारकेणसहवर्तमा
नासतारकासत्यासती सतारकासत्यसतारका

सत्यमबाधितं विज्ञानमयस्तारकं यद्ब्रह्मतद्रूपेत्यर्थः रामपक्षेएतत् ॥ अथकृष्णपक्षेतु ॥ साकारतासत्यसतारकास्ति याकृष्णरूपिणीसाकारतासासती सर्वदेवबर्तमानानित्येत्यर्थः किंभूताअसतारका तारकाभिःसहवर्तमानंसतारकं व्योमतन्नविद्यतेयस्याः सोअसतारका व्योमापियस्यांलीयतेइतःपरन्नित्यत्वं किंवर्णनीयं इत्यर्थः चिरंविरंचिरित्यादिपूर्ववत् ॥ २ ॥

तामसीत्यसति सत्यसीमतामायया
क्षमसमक्षयायमा ॥ माययाक्षमसम
क्षयायमा तामसीत्यसति सत्यसीम
ता ॥ ३ ॥

अथ रामकृष्णाभ्यांयां मायामवष्टभ्यसाकारता स्वीकृतातस्याः स्वरूपंविषमाक्षरयारथोद्धतया ह असतिसत्यसीमतातामसीति असतिशुक्ति

कारजतवदसत्येप्रपंचेसत्यसीमतासत्यत्वमर्या
दातामसीमायेति अथास्याअसत्यत्वंकार्यवशा
दनुभूयतइत्याह माययेति ययामाययाकृत्वा
मालक्ष्मीः अयमानविद्यतेयमोनियमोयस्याः
सातथा योग्येऽयोग्येत्राकुत्रस्थातव्यंकियत्कालं
स्थातव्यमितिक्षणभंगुरायाःलक्ष्म्याः यमोनिय
मोनास्ति उत्तरक्षणेबाधदर्शनाद्भ्रमरूपतेत्यर्थः
कथंभूतयाययाअक्षमसमक्षया नक्षमंअक्षमंस
मक्षंयस्याःसातथा तस्याःमायायाःस्वरूपेविचा
र्यमाणेसमक्षत्वं न प्राप्नोतिप्रेक्षणेनैव नश्यती
त्युक्तत्वात् यतःपरमात्माज्ञानरूपः मायात्वज्ञा
नरूपासाकथं ब्रह्मसमक्षतांयाति यतोज्ञानम
ज्ञानस्यैव घातकमित्यर्थः एवमुभयत्रापिसम
मिति समाक्षरपदद्वयं रथोद्धतायालक्षणम् रोन
राविहरथोद्धतालगौ ॥ ३ ॥

का तापघ्नी तारकाद्या विपापा त्रेधा विद्या नोष्णकृत्यं निवासे ॥ सेवा नित्यं कृष्णनोद्या विधात्रे पापाविद्याका रताघ्नी पताका ॥ ४ ॥

एवमविद्यायाः स्वरूपं निरूप्येदानीं विद्यारूपं विषमाक्षरयाशालिन्याह अत्रत्रिविधसंसारतापघ्नीकास्तीति विचार्यमाणे त्रेधाविद्यास्तीति त्रिःप्रकारात्रेधाऋग्यजुःसामात्मिका ननुतर्हि न कर्मकाण्डंविद्याशब्दव्यपदेश्यम् विद्यांचाविद्यांचयः तद्वदुभयंदुःसहेत्यादुयक्तत्वादित्याशंक्याह किंभूता त्रेधाविद्यातारकाद्यातारकंपरंब्रह्मश्रीरामाख्यं आद्यंश्रेष्ठत्वान्निरूपणीयत्वेन प्राप्तंयस्याः सातथा उपनिषद्विद्यात्मिकेत्यर्थः पुनःकिंभूता विपापाविगतंपापमज्ञानंययासातथा अथतस्याः पापोपशामकत्वे

दृष्टांतमाह निवासेनोष्णकृत्यमिति नितरांवा
सोयस्मिन्निति निवासः शीतलच्छायाद्युपस्कृ
तंगृहंतस्मिन्नुष्णकृत्यंसन्तापभवनंनास्ति तद्ध
द्वेदार्थपरिशीलनेनत्रिविधतापोन्मूलनमित्यर्थः
रामपक्षे चैतज्ज्ञेयं ॥ अथकृष्णपक्षेतु ॥ कृष्ण
भक्तिसहकृतैव विद्या अज्ञाननाशकर्त्रीत्याह
सेवानित्यमिति विधात्रे अनुष्ठात्रे अर्जुनायब्रह्म
णेवाकृष्णनोद्यानित्यंसेवा पापाविद्याकारता
द्वोभवति कृष्णेननोद्याप्रेर्यमाणानित्यंसेवाअ
नन्यभक्तिःसापापंदुःखंतन्मूलमविद्याकारोऽज्ञा
नंतदुभयमपिनाशयति तदुक्तं भगवद्गीतायां
भक्त्यात्वनन्यया शक्य अहमेवं विधोर्जुन
ज्ञातुन्द्रष्टुंचतत्त्वेन प्रवेष्टुंचपरंतपेति अनन्य
भक्तिरेव कृष्णसाक्षात्कारनिमित्तमिति सदृष्टां
तमाह किंभूनासेवा पताकापताकेवपताकाय

थागरुडलांछनांकिताकृष्णध्वजपताकादृष्टमात्रै
वआगतः कृष्णइतिसाक्षात्कारंव्यनक्ति तद्वद
नन्यभक्तिरपीत्यर्थः ॥ शालिन्या लक्षणं शालि
न्युक्तास्तौतगोगोब्धिलोकैः ॥ ४ ॥

श्रीरामतो मध्यमतोदि येनधीरोऽनि
शंवश्यवतीवराद्वा ॥ द्वारावती वश्य
वशंनिरोधी नयेदितो मध्यमतोऽमरा
श्रीः ॥ ५ ॥

अथप्रथमंमायापरमात्मनः समक्षंस्थातुन्नशक्नो
तीतिस्वरूपानुसंधानेन मायायास्तिरस्कारइत्यु
क्तं तत्रात्मज्ञानेमहानायासः श्रीरामसेवयातुवि
द्याप्राप्तिस्तयातत्कालमेवाज्ञाननिरासइतिविष
माक्षरयेंद्रवज्रयाह श्रीरामेति वाइत्यथत्रासपु
मान्धीरःयेनानिशंश्रीरामतः मध्यमतोदि श्री
रामतोनिमित्तभूतान्मध्यंमध्ये अवभासमानंप्र

पंचाख्यं अतोदिनाशितम् सएवधीर इत्यर्थः किंभूताच्छ्रीरामतः वश्यवतीवरात् यशंनेतुंस मर्थंवश्यंरूपंतद्वतीजानकीतस्याः वरात्भर्तुरि त्यर्थः॥कृष्णपक्षेतु।निरोधीपुमान्मध्यंनुचिदचि द्ग्रन्थिस्वरूपंमनःइतःप्रपंचात्द्वारावतीवश्यव शंनयेत् वायुनिरोधींद्रियनिरोधीचपुमान्द्वारा वत्याःवश्यःतत्रासक्तःकृष्णस्तत्रवशंनयेत् योगे न वैराग्येणवाचित्तंनिरुध्य श्रीकृष्णएवएवंव शंनयेदित्यर्थः तेन किंभवतीत्याह अतःअस्मा दुपायाच्छ्रीर्मोक्षलक्ष्मीः अमरास्थिराभवति अ न्यथानिरोधवानपि विघ्नैरभिभूयतइत्यर्थः उ क्तंच तथानतेमाधवतावकाःक्वचिद्भ्रश्यन्तिमा र्गादित्यादि ॥ ५ ॥

कौशिके त्रितपसि क्षरव्रतीयोऽददा
द्धितनयस्वमातुरं ॥ रन्तुमास्वयन

तद्विदादयो तीव्ररक्षसि पतत्रिकेशि
कौ ॥ ६ ॥

अथकथाप्रारंभः तत्रविश्वामित्रःस्वयज्ञसंरक्ष
णार्थंरामंयाचितुं दशरथंप्रत्यगादितिविषमाक्ष
रयारथोद्धतयाह यःक्षरव्रतीद्वितनयस्वंकौशिके
अददात् क्षरेषुसर्वेषुभूतेषुव्रतमभीप्सितपूरणं
येनतथाविधोदशरथःद्वयोस्तनययोः समाहारो
द्वितनयमृतदेवस्वंधनंकौशिकेविश्वामित्रे दत्तवा
न् ननुप्राणादपिप्रियतमंपुत्राख्यंधनंविश्वामि
त्रार्थं केननिर्बंधेनदत्तवानित्याशंक्याह किंभूते
विश्वामित्रेत्रितपासित्रिःप्रकारकं त्रिगुणात्मकंप्र
सादक्षोभसमर्थंतपोयस्यसतथा तस्मिन्किंभूतं
द्वितनयस्वंआतुरंपित्रोर्वियोगादित्यर्थः ॥ कृ
ष्णपक्षेतु ॥ श्रीशुकःपरीक्षितंप्रतिवक्ष्यमाणंकृ
ष्णकथोद्देशमनुवदति भोआस्वयन आसमंता

त्सुष्ठु अयनंगतिःपरमार्थगतिःयस्यतथाविधः परीक्षित्तद्वित्कृष्णोऽतीव्ररक्षसिनविद्यते तीव्रं रक्षःयस्मात्तत् अतीव्ररक्षःतस्मिन्पूतनाख्ये त थापतत्रिकेशिकौ पतत्रीपक्षीबकासुरःकेशीहय रूपीदैत्यः तयोःकुःपार्थिवशरीरंतस्मिन् आद योऽस्तिआसमन्ताद्दयाकृपायस्यसतथा पूतना बककेशिशरीराणिकृपयैवातारयदित्यर्थः किङ्क तुं रंतुं क्रीडांकर्तुं क्रीडाछलेनेत्यर्थः ॥ ६ ॥

लंबाधरोरुत्रयलंबनासे त्वं याहि या
हि क्षरमागताज्ञा ॥ ज्ञातागमा रक्ष
हि याहि या त्वं सेना बलं यत्र रुरोध
बालम् ॥ ७ ॥

अथ विश्वामित्रेणसहरामंप्रस्थितमाकर्ण्यराक्ष सास्ताटकांप्रेषयामासुरित्याहभोलंबाधरोरुत्वं क्षरंयाहिअधरश्चऊरूचअधरोरुलंबंअधरोरुय

स्याःसालंबाधरोरूःतस्याःसंबोधनं तथाकिंभूते त्रयलंबनासे त्रयेलोकत्रयेलम्बानासायस्याःसा तयाविधेत्वंक्षरं नाशयोग्यंमानुषंदेहं रामंया हि आदरेवीप्सितेद्विरुक्तिः किंभूतात्वं आग ताज्ञा आगताप्राप्ता आज्ञारावणाज्ञा ययात था ॥ कृष्णपक्षः ॥ श्रीकृष्णंगोकुलस्थितमाक र्णयकंसः पूतनामाज्ञापयति हेपूतनेत्वंतत्र याहि बलंपुरुषार्थंरक्ष तत्रक्केत्याह यत्रसेनाबालंरुरो ध इत्यनेनस्वामिनानन्देनसहवर्तमानायशोदा बालंकृष्णंरुरोध रुध्वाआच्छाद्यस्थितवतीतत्रेत्य र्थः कुतएतावंतंविश्वासंकृतवतीत्याह हीतिनि श्चयेन ज्ञातागमाज्ञातआगमोययासाकोपिबा लघातार्थंआयास्यतीतिसंभावयन्तीत्यर्थः ॥७॥

लंकायना नित्यगमा धवाशा साकंत
यानुन्नयमानुकारा ॥ राकानुमा यन्न

नुयातकंसा शावाधमागत्य निनाय
कालम् ॥ ८ ॥

अथत्ताटकयासहशूर्पणखापिसमागतेत्याह लं
कायनातयासाकंनित्यगमा ऽभूत् लंकायामय
नंगतिर्यस्याः साशूर्पणखा तयाताटकयासाकं
नित्यगमाऽभूत् नित्यंगच्छतीतिनित्यगमापर्य
टनासक्ता ऽभूदित्यर्थः अनुब्नयमानुकारा ननु
ब्नःप्रेरितःअनुब्नः स्वतःप्रवृत्त एवंविधोयोयमः
कृतान्तस्तद्वदनुकारोयस्याःसा निष्कृपेत्यर्थःकिं
भूता धवाशा धवविषयिणीआशायस्याः सात
था रामंभर्तारमपेक्ष्यमाणा ॥ अथकृष्णपक्षः ॥
शावाधमाआगत्यकालंनिनाय शवप्रियाः शा
वाःक्रव्यादाःतेषु अधमाबालघातिनीपूतनाआ
गत्यगोकुलंप्राप्यकालंखग्रासकं कृष्णंनिनायप्रा
प्तवती ननुराक्षसीगोकुलांतर्गतातत्रत्यैः किंपूर्वं

ननिषिद्धेत्याह यद्वातःराकानुगा राकापूर्णिमा तयाअनुमीयतेसा प्रथमंराकावदतिसुन्दरंरूपं धृतवतीतद्दाक्षिण्येन केनापिगृहांतर्गमनेनाक्षिप्ता नन्विति निर्धारणे यातकंसा यातःअंतरितः कंसोयस्याः सातथा पुनःकंसेननदृष्टा कृष्णग्रस्तासतीविपन्नाइत्यर्थः ॥ ८ ॥

गाधिजाध्वरवैरा ये तेऽतीता रक्षसा
मताः॥तामसाक्षरतातीतेयेरावैरध्व
जाधिगाः ॥ ९ ॥

अथविश्वामित्रस्ययागव्यवस्थामनुष्टुभाहगाधिजोविश्वामित्रस्तस्याध्वरोयागस्तत्रवैरंयेषान्ते खरदूषणादयस्तेअतीताःरामेणतेहताःदेहादिप्रपंचमतिक्रम्यगताइत्यर्थः किंभूताःरक्षसा रावणेनमताःस्वसंमानेनप्रसिद्धाः ॥ अथकृष्णपक्षः ॥ पूतनावधमाकर्ण्यकंसेनान्येबकतृणाव

तादृयःप्रेषिताःइत्याह तामसाक्षरतातीतकृष्णे सतियेरावैः प्रेषितादैत्याः तेअध्वजाधिगाआ सन् तामसाऽहंकारेणासमन्तादुत्पन्नायाक्षरता प्रपञ्चात्मकतातत्तोप्यतीते परब्रह्मरूपेकृष्णेसति दैत्याः रावैः कंसनिर्देशशब्दैः आगतास्ते अ ध्वजाधिगाःगोकुलमार्गयानेजातायआधिः मा नसीव्यथातंगच्छन्तः प्राप्ताः अहोगोकुलंगत्वा प्रपंचातीतेकृष्णेअस्माभिः किंकर्तव्यं पूतनाव न्मर्तव्यमितिपर्याकुलचित्ताआसन् इत्यर्थः ॥९॥

तावदेव दया देवे यागे यावद वास
ना॥नासवादवया गेया वेदे यादवदे
वता ॥ १० ॥

अथमुनिभिः केवलं रामार्पणबुद्ध्याकृतस्ययाग स्यप्रशंसामाह देवेरघुनाथेदयाकृपाप्रीतिस्ताव देवसंभवतीति यावद्यागेअवासनायागेक्रियमा

णेअत्रासनास्वर्गादिभोगप्राप्तये इच्छाराहित्य
न्तस्मात्फलराहित्येनयोयागः सरामप्रीतयेभव
तीत्यर्थः अथकृष्णपक्षेकृष्णेपरब्रह्मस्वरूपतांअ
वधारयन्तोदैत्याः पुनःपरामर्शंचक्रुरित्याहया
दवदेवताकृष्णमूर्तिः वेदेउपनिषद्भागे यागातुं
निरूपयितुंयोग्या नतुसाक्षात्कारं कर्तुमथवा
न्येननिरूपयितुंनशक्यतेइत्याह नासवादिति
असुसंबंधिआसवंप्राणात्मकंशरीरं अवेत्युपस
र्गः अवलक्षणत्वद्योतकः तथाचावलक्षणान्म
नुष्यदेहात्खकाशाज्ज्ञातिनिरूपयितुंशक्यते एवं
प्रथमंतस्यनिरूपणासम्भवे तस्य हननमस्माभि
रसम्भावितमेवेत्यर्थः वस्तुतस्तुआसवात् आ
सवादितिमदजनकवस्तुमात्रोपलक्षणं तस्माज्ज
अवयानज्ञेयातन्निमित्तमासवाद्दुर्ज्ञेयेत्यर्थः अ
वयेतिअवयायतेइत्यवया आतोनुपसर्गेकइति

कः पञ्चाहाप् अवपूर्वकोयातिरेतिश्चज्ञापनार्थः ॥ १० ॥

सभास्वये भग्नमनेन चापं कीनाशता नद्धरुषा शिलाशैः ॥ शैलाशिषारुद्धन ताशनाकी पंचानने मग्नभयेस्वभासः ॥ ११ ॥

अथस्वयंवरदर्शनार्थं कौशिकेनसहजनकगृहंप्रतिगतोरामः तत्रकिंकृतवानित्याह अये स्रोतः अनेनरामेणसभासुशिलाशैः सहचापंभग्नंसभासुस्थितासुशिलावद्दृढा जानकीविषयिणी आशा येषांतेशिलाशाःराजानस्तैःसह चापंभग्नंनकेवलंचापंभग्नं राजानोभग्नाभग्नमनोरथाः कृताइत्यर्थः कीनाशतानद्धरुषाकीनाशस्यभावः कीनाशतायमरूपतातयाआनद्धःअभिनिविष्टोरावणस्तस्यरुषाकोपेन प्राचीनवैरानुबंधनि

मित्तेनपूर्वंधनुरुद्धर्तुं प्रवृत्तोरावणः धनुषाधःप
तितः परंतुनहतइतिरुषाकोपेनेवेत्यर्थः ॥ अथ
कृष्णपक्षः ॥ गोवर्धनोद्धरणेइन्द्रोलाघवंप्राप्तइ
त्याह पंचानने नृसिंहे कृष्णे स्वभासः स्वप्रता
पान्मग्नभये निःशंकं यागंकारयितुं प्रवृत्तेसति
शैलाशिषारुद्धनताशःनाकीदृष्टः शैलस्यगोवर्ध
नस्याशिषाअभीष्टपूरणेनरुद्धारोषंप्रापिता अत
एवनता भग्नाहविर्ग्रहणेच्छायस्यतथाविधो नाः
की स्वर्गाधिपोऽभूदित्यर्थः । योगोवर्धनभूधरंक
रधृतंलीलांबुजन्मायितं कृत्वासप्तदिनानि ना
चलद्दपाङ्गोपांश्चघोरापदः । यश्चक्रे निजशासने
हरिविरिंच्याखण्डलादीन्सुरानुद्दंडानपि सोव
ताज्जगदिदंगोपालराजोहरिरिति श्रीभागवते
दशमस्कंधे ॥ ११ ॥

न वेद यामक्षरभामसीतां का तारका

विष्णुजितेऽविवादे ॥ देवाविते जिष्णु
विकारता का तां सीमभारक्षमयाद
वेन ॥ १२ ॥

अथस्वयंवरार्थमागतानांराज्ञांवर्णयन्नाहयां
अक्षरभामसीतां लोकोनवेद अक्षरमविच्युतंभा
मसौभाग्यंयस्याःसाअक्षरभाम्नी साचासौसीता
चतांनजानातीत्यर्थः अत्रिवादेविष्णुजितेकाता
रका विष्णुनारामचंद्रेण जितं विष्णुजितंतस्मि
न्विष्णुजिते अविवादे सर्वसंमतेसतिकातारका
तारकात्वंकाप्राप्नोतीत्यर्थः तारकासंबंधस्तुचं
द्रंविनान्येनसहन भवतिप्रकृते रामचंद्रेणसहसी
तैवतारकात्वंप्राप्तुमर्हतिनान्येनेत्यर्थः ॥ अथ
कृष्णपक्षः ॥ गोकुलोपरिक्षुब्धस्येंद्रस्यनाकिंचि
च्चलतीत्याह सीम्नोभारःसीमभारः सीमागिरि
मर्यादातस्याभारक्षमश्चासौयादवश्च तेनदेवश

त्त्या अवितेरक्षिते गोकुलेजिष्णोरिंद्रस्य शि लावर्षणादि विकारताका नकापीत्यर्थः ॥१२॥

तीव्रगोरन्वयत्रार्यो वैदेहीमनसो म
तः ॥ तमसो न महीदेवैर्यो त्रायन्वर
गो व्रती ॥ १३ ॥

अथधनुषिभग्नेसतिजानक्यारामोवृतइत्याह तीव्रागावःकिरणाःयस्य एवंविधस्यतीव्रगोःसू र्यस्य अन्वयंवंशंत्रायतेतेअन्वयत्राः सूर्यवंशाभि मानरक्षकाः दिलीपादयस्तेष्वार्यः श्रेष्टः सूर्यवं शालंकरणंरामः वैदेहीमनसोमतः जानक्यामनः पूर्वकं वृतःधनुःपणबंधेनेत्यर्थः ॥ अथ कृष्णप क्षः ॥ ब्रह्मसत्रंप्रतिगतः कृष्णस्तैर्नमानितइत्या ह अत्रायन्वरगोव्रतीकृष्णः अत्रब्रह्मसत्रे आय न्प्राप्तः वराभाग्यशालिन्योगाव एवव्रतं परिपा लितत्वेनोपस्थितं यस्यासौगोव्रतीकृष्णः तम

सो ऽज्ञानान्महीदेवैर्ब्राह्मणैर्नमानित इत्यध्या
हारः ॥ १३ ॥

वेद या पद्मसदनं साधारावततार
मा ॥ मारता तव राधा सानंदसद्मप
यादवे ॥ १४ ॥

अथजानक्याःपारमार्थिकंस्वरूपं वर्णयन्नाह
साधारामाअवततार आधारेणविष्णुनासहल
क्ष्मीः अवतारंचक्रे साकायापद्मसदनंवेद पद्म
मेवसदनं अधिवासस्थलंवेदज्ञातवती अनेनल
क्ष्म्याः पूर्णावतारइतिसूचितं अथवापद्ममंवि
ष्णोश्चरणकमलंतदेवसदनंविश्रामस्थलंजानाति
॥ अथकृष्णपक्षः ॥ अथकापिगोपिकानंदंप्रति
राधायाः पैशुन्यंवदति भोसद्मपगृहाधीशनंद
सातवराधासेतिनच्छब्देनविदितवृत्तांतेतिसूचि
तं तथायादवेसैवकृष्णेमारतामदनरूपताइत्ये

वंसमाचारोस्ति अनेनकृष्णस्यत्रयःसंबंधिनीव र्णिताभवति ॥ १४ ॥

शैवतो हननेऽरोधी यो देवेषुनृपोत्स
वः॥ वत्सपो नृषु वेदेयो धीरोऽनेन ह
तो वशैः ॥ १५ ॥

अथईश्वरस्य धनुर्भंगमाकर्ण्य परशुरामोभ्य गादित्याह नृपोत्सवःशैवतोहनने अरोधीनृप स्य आगतस्यदशरथस्योत्सवोयस्मात्सनृपोत्स वोरामः शिवस्यपक्षपातीतिशैवः परशुरामस्त स्माच्छैवतः हननेकोपाविर्भावेप्यरोधी नरोधं प्राप्तवान् अकुंठितशक्तिरासीदित्यर्थः विमान स्थितेषुदेवेषुपश्यत्सुसत्सु ॥ अथकृष्णपक्षः ॥ अथकृष्णस्वरूपंधेनुकवधंचाह यः वेदेऽस्तिवेदे प्रतिपादितोऽस्ति सनृषुवत्सपोऽभूत् अनेनवत्स पेनकृष्णेनधीरोधेनुकः अवशैः असाध्यैस्तज्ज्ञा

तीयैरन्यैः सहहतोमारितइत्यर्थः ॥ १५ ॥

न गोपगोसि क्षर मे पिनाकेऽना
योऽजने धर्मधनेन दानं ॥ नंदाननने
धर्मधने जयोना केनापि मे रक्षासि
गोपगोनः ॥ १६ ॥

अथ परशुरामः रामंप्रति सक्रोधं वदतिभो
क्षरनश्वरमेपिनाकेत्वंनगोपगःअसि यद्यपि त्व
याजीर्णं धनुर्भग्नंतथापिमदानतेधनुषि नगस्य
पर्वतस्योपसमीपेगच्छतीतिनगोपगःपाषाणस्त
त्तुल्योसि मदीयधनुषोतिगुरुत्वेननिश्चेष्टोभव
सीत्यर्थः एवमेतादृशेत्वयिजनकेनयत्कन्यादा
नंकृतंतदयुक्तमित्याह धर्मधनेनकन्यालक्षणेन
अजनेयद्दानंसअनायःअजनोऽदानपात्रं एवंअ
दानपात्रेत्वयि यद्दानंकृतंसअनायः नयोनीति
स्तत्संबंधीनायः ननायःअनायः अनीतिरित्य

र्थः ॥ अथकृष्णपक्षे ॥ दैत्यवधं दृष्ट्वानंदःकृष्णं स्तौति श्रीकृष्णत्वंनंदाननेनासि नंदएव आननंमुख्योयस्मिन्गोकुलेतस्मिन् नापुरुषः परमात्माअसि बलवत्त्वात् अतएवकिंलक्षणेनंदानने धर्मधनेजन्मांतरीयधर्मैरर्जितं तस्मिन् तथानः अस्माकं जयोपित्वमेवासि केनापि सुकृतविपाकेनगोपगः गोपविशेषेणवर्तमानः सन् मेइति मांरक्षसि ॥ १६ ॥

ततान दाम प्रमदा पदाय नेमे रुचामस्वन सुंदराक्षी ॥ क्षीरादसुं न स्वमचारु मेने यदापदाम प्रमदा नतातः ॥ १७ ॥

अथरामंराज्याधिकारिणंदृष्ट्वाकैकेयी सापत्नभावं दर्शयतीत्याह आमस्वनाअपरिपक्ववचनातथाविधासुन्दराक्षीकैकेयी पदाय राज्यप्राप्

येयद्दामनिर्बंधकारणंततानविस्तारयामास स्व
पुत्रायराज्यंदेयमितिदशरथायनिर्बंधंचकारेत्य
र्थः आमस्वनेतिपदेन नेदंमातृकृत्यमितिसूचि
तं अथकथंदामततानेत्याह इमेरुचानरुचादी
प्त्याइमेरामादयः पदयोग्यानभवंति तथा त
स्याः किंलौकिकंभयंनास्तीत्याह प्रमदेति प्रकृ
ष्टोगर्वोयस्याः सातथा ॥ अथकृष्णपक्षः ॥ अ
थकदाचित्कृष्णेनदधिभांडेभग्नेदुग्धनाशे जाते
यशोदायाः अतिभ्रमोभूदित्याह प्रमदायशोदां
क्षीरात्सकाशादसुं प्राणमपिस्वकीयंनमेने यथा
क्षीरेममतातथाप्राणेमाभूदित्यर्थः अथकृष्णबं
धनार्थंयद्दाम आपप्रापतदचारुकार्यक्षमंनभव
तीतिमेने अतःदामपूरणहेतोर्नतानभ्रापरिभ्रांता
भूदित्यर्थः ॥ १७ ॥

तामितो मत्तसूत्रामा शापादेष वि

गानताम् ॥ तां नगाविपदेऽपाशा
मात्रासूत्तमतो मिता ॥ १८ ॥

अथवनवासार्थं रामेप्रस्थितेसतिअहिल्योद्धा रणप्रसंगमाह मत्तसूत्रामातांइतःप्राप्तः मत्तःका ममोहितः सूत्रामाइन्द्रस्तांप्रतिप्रसिद्धामहिल्यां प्रतिगतःसूत्रामागोत्रभिद्वज्रीत्यमरः तथाएष सूत्रामाइन्द्रःशापाद्विगानतांइतः गौतमकृतात् विगानतांसहस्रभगत्वादिलक्षणांप्राप्तः ॥ अथ कृष्णपक्षः ॥ पूर्वश्लोकेयशोदयाकृष्णः दाम्ना बद्धइतिनिरूपितं तत्रयमलार्जुनोन्मूलनप्रसंग माह तांव्यवस्थामनुभूयनगाविपदेकृष्णेसतिय शोदामात्रासुअपाशातथाउत्तमतामिता अभू त् नगच्छतस्तौनगौस्थावरौ वृक्षौ यमलार्जुनौ ताभ्यां अविषममृतंमोक्षः तत्प्रदेकृष्णेसति य शोदामात्रासुदधिदुग्धादिविषयेषु अपाशाअ

निर्बंधासतीउत्तमतः अलौकिककर्मकर्तुः कृष्णान्मितासमर्यादाभूत् ॥ १८ ॥

नासावद्यापत्रपाज्ञाविनोदी धीरोऽनुत्या सस्मितोऽद्याविगीत्या ॥ त्यागीविद्यातोऽस्मि सत्यानुरोधीदीनो विज्ञापातूपद्यावसाना ॥ १९ ॥

अथशूर्पणखायाः प्राप्तायाः नासिकानिकृन्तनं कृतमितिशालिनीछंदसाह शूर्पणखातावन्नासावद्यापत्रपास्ति नासानासिकातस्याः अवद्यंविगानंछेदलक्षणं तत्र अपत्रपा निर्लज्जास्ति लक्ष्मणस्तु आज्ञाविनोदीआज्ञयारामाज्ञयाविनोदोयस्यातिविनोदीतथाधीरः उदात्तः श्रीरामस्तुअनुत्याशूर्पणखाकृतयास्तुत्याउपालंभेन अद्याविगीत्या अकीर्तिख्यापनेनसस्मितोभूत् ॥

अथकृष्णपक्षः ॥ नारदशापादुन्मोचिताभ्यांकु

वेरपुत्राभ्यां स्तुतःकृष्णस्तौप्रतिस्वरूपमाह अ हंविद्यातः ज्ञानतस्त्यागीज्ञानप्रदोऽस्मि तथास त्यानुरोधी सत्यं परब्रह्मतत्रअनुरोधोत्यासक्ति र्यस्यसतथा लोकस्तुदीनः विषयसुखासक्तोऽस्ति अविज्ञाअविद्यातुपात्रपद्मावसानापात्रंज्ञानपा त्रंमदुक्तस्तस्य पद्मापद्धतिर्ज्ञानमार्गनिष्ठत्वं ते नैवात्रसानंनाशोयस्याःसातथोक्ता एवंसतिशा पनिर्मुक्तिः क्रियतइत्यर्थः ॥ १९ ॥

संभावितं भिक्षुरगादगारंयाताधिरा
प स्वनघाजवंशः॥ शवं जघान स्व
पराधितायारंगादगार क्षुभितं वि
भासम् ॥ २० ॥

अथ पंचवटीवनेसपरिग्रहेरामेकृताधिवासेसति किंचिदपूर्वंजातमित्याह भिक्षुः संभावितमगा रमगात् भिक्षुरूपधरोरावणःसंभावितंपूर्वंनिर्मा

यकत्वेन ज्ञातंअगारंपंचवटीस्थलंअगात् ततः
स्वनघाजवंशः याताधिःसन् आप सुतरांअन
घःनिष्पापः एवंविधोऽजवंशोब्रह्मवंशोरावणः
यातागतः आधिश्चिन्तायस्यजानकींदृष्ट्वानिश्चिं
तः जानकींप्राप निष्पापवंशोत्पन्नोप्येतादृशं
निंद्यंपापकर्माऽकरोदित्याश्चर्यादिति सूचितं ॥
अथकृष्णपक्षः ॥ पूर्वोपक्रांतःकृष्णो रंगाद्रंग
स्थानात्सकाशात् शवंचिंतयापूर्वमेवगतप्राणं
कंसंजघान किंभूतंअगारक्षुभितंअगारंराजकी
यपरिवारस्तस्मिन्क्षुभितंसक्रोधं एषचाणूरघा
तीकृष्णोबहिःकथंननिःसार्यतइति पुनःकिंभूतं
विभासंविच्छायंगतकांतिंसद्योमृतचिन्हयुतमि
त्यर्थः अथकस्माद्धेतोर्जघानेत्याहस्वपराधिता
याःअपराधिनोभावःअपराधितासुतरामपरा
धितातस्यास्तथा पितृनिर्बंधाग्रजहननपूतना

दिकूटरचनादयो येऽपराधास्तत्कर्तृत्वादित्यर्थः ॥ २० ॥

तयातितारस्वनयागतं मालोकापवा
दद्वितयं पिनाके ॥ केनापि यं तद्विद
वाप कालो मातंगयान स्वरतातिया
तः ॥ २१ ॥

अथ मृगयापरावृत्तस्यरामस्यजानकीमपश्यतो निर्वेदमाह तयामागतंतयाजानक्यामेतिधिक्मृषैवगतंनिष्क्रांतं अथसास्वतोनगताबलात्कारेणनीताभविष्यतीत्याह किंभूतयाअतितारस्वनयाउच्चैराक्रोशमानयापि एवंतस्यांगतायांपिनाकेलोकापवादद्वितयंजातं पिनाकेपुरुषार्थाधिष्ठानेलोकापवादद्वितयं अज्ञानेन मृगपृष्ठतो धावनं स्त्रीहानिश्चेतिअपवादद्वितयंजातमित्यर्थः ॥ अथकृष्णपक्षः ॥ कंसहननात्पूर्वंरंगमा

ह यंकंसंकेनापिप्रकारेणकालःकृतांतोपमःकृष्णः अवाप ननुपरब्रह्मस्वरूपस्य कृष्णस्य कंसद्वेषः कथमित्याह किंभूतः कालस्तद्वित् तदुपस्थितं कंसनिबंधनंवेत्तीतितद्वित् अथसकः प्रकारस्त माह किंभूतः कालोमातंगयानस्वरतातियातः मातंगःकुवलयापीडस्तस्ययानंवाहनंस्वरश्च त द्वव्याक्रोशस्तमतिलंघ्ययातः कुवलयापीडंक्रो शंतंमारयित्वारंगंप्राप्तइत्यर्थः ॥ २१ ॥

शवेऽविदा चित्रकुरंगमाला पंचावटी
नर्म न रोचते वा॥ वातेचरोऽनर्मनटीव
चापंलामागरं कुत्राचिदाविवेश ॥२२॥

अथ रामस्य पुनर्जानकींप्रति निर्वेदोक्तिमाह भोजानकिअविदाअज्ञानेनमयासह पंचावटीन र्मनरोचतेवायेनत्वंगतासीत्यर्थःअथतदेवाज्ञा नंप्रकटयन्नाह शवेशवप्रियेराक्षसे चित्रकुरंग

मालास्तीति मायामृगमजानतामयेत्यर्थः ॥ अ थकृष्णपक्षः ॥ कृष्णस्यसामर्थ्यं कंसहननात्पूर्वमेव प्रकटीभूतमित्याह यःकृष्णः वातेवात्या भूतदैत्ये तृणावर्तेअचरः अचलोभूत्तथालामागरंकुत्रचिदाविवेश लामापूतनातस्याः गरंविषं नर्मैवक्रीडामात्रमिवकुत्रचिदाविवेशनकृष्णे अ नेनबाल्येएतावंतंपुरुषार्थं कृतवान्किंपुनर्यौवनेइतिसूचितं एवमेतदुभयंसदृष्टांतमाहकिमिव नर्मंनटीनर्तकी चापंभ्रूभंगमात्रं दर्शयतितद्वदित्यर्थः ॥ २२ ॥

नेह वा क्षिपासि पक्षिकन्धरा मालिनी
स्वमतमत्त दूयते ॥ ते यदूत्तमतमस्व
नीलिमा राधकं क्षिपासि पक्षिवाहने
॥ २३ ॥

अथजानकींस्कंधेगृहीत्वासत्वरंनिर्गतस्यरावण

स्य जटायुनासाकंसंगोभूदितिरथोद्धतयाहृ ज
टायुःरावणंप्रतिवदतिभोस्वमतमत्तइयंमालिनी
हूयते स्वमतंस्वाग्रहस्तेनमत्तउन्मत्तः स्वाग्रह
मेवकरोषिपरकीयविचारंनशृणोषिअसावधान
त्वादित्यर्थः मालिनीअतिसुकुमाराजानकी हू
यते क्लेशंप्राप्नोति किंभूतापक्षिकंधरा पक्षिणि
स्वपक्षपातिनिमयिकंधरामन्यायस्याः सा तां
इहमत्स्थानेनक्षिपसिवानमुंचसिवातर्हि संग्रामे
णमोचयिष्यामीतितात्पर्यार्थः॥ अथकृष्णपक्षः॥
कंसवधेकृतेउद्धवाक्रूरादयः कृष्णंस्तुवंति भोय
दूत्तमतमस्वनीलिमाराधकं स्वस्यनीलिमातंआ
राधयतीतिस्वनीलिमाराधकंपुरुषंतेपक्षिवाहने
क्षिपसि यदुषुउत्तमतमश्रेष्ठतम त्वदनुस्मृतिं कु
र्वाणंपुरुषंतेपक्षिवाहनंगरुडः तस्मिन् क्षिपसि
आरोहयसिगरुडारूढंकृत्वावैकुण्ठंप्रति नयसी

त्यर्थः एवमपरोक्षभावनया एतत्फलं कंसस्य श्रीमत्साक्षात्कारेप्रवृत्तस्य मुक्तिरित्यत्रकिंचित्र मित्यर्थः ॥ २३ ॥

वनान्तयानस्वणुवेदनासु योषामृते
ऽरण्यगताविरोधी ॥ धीरोऽवितागं
प्यरते मृषा योसुनादवेणुस्वनयात
नां वः ॥ २४ ॥

ततोजटायुवचनाज्जानकीशुद्धिं लब्ध्वापिदक्षि णतश्चलितस्य रामस्यावस्थामाह सरामःयोषा मृतेवनांतयानस्वणुवेदनासुअरण्यगताविरोधी अभूत् योषांजानकींविनावनांतेषुयानंपरिभ्रम णंतत्रमहाक्लेशप्राप्तावपि सुतरामणुवेदनासु वि वेकेनलक्ष्मणकृतेनसांत्वनेनचईषत्क्लेशेषु जातेषु सत्सुअरण्यगताःवानराःअविरोधिनामित्राणि वयस्याःयस्य स्त्रीवेदनासूद्भूतासुसतीषु वान

रैःसह सख्यंयज्जातं तेनाविश्रांतिरभूदित्यर्थः ॥
अथ कृष्णपक्षः ॥ कृष्णेविहायगोकुलंमथुरांगते
सति विरहखिन्नागोप्योमिथः प्रोचुरित्याह अ
गण्यरतेधीरःवःअविताइतिमृषागणयितुं संभा
वयितुंयोग्यंगण्यंनगण्यंअगण्यंअश्लाघ्यं कु
ब्जयासहरतंतत्रधीरः निर्लज्जत्वेनप्रवृत्तः कृ
ष्णःवःअवितापुनर्गोकुलमागत्यरक्षिष्यतीतिमृ
षाअसत्यंतत्कुतः सुनादवेणुस्वनयातनां किं न
स्मरतीत्यध्याहारः सुष्ठुनादोयस्यासौसुनादः
एतादृशःवेणुस्तस्यस्वनस्तेनकृतांयातनां दूराद्वे
णुस्वनमाकर्ण्ययावत्कृष्णदर्शनं तावत्पर्यंतंया
यातनाविरहदुःखमस्माकं किंपुनस्तस्मिन् पर
देशंगतेसतिकिंनस्मरतीत्यर्थः ॥ २४ ॥

किंनु तोयरसापम्पा न सेवानियतेन
वै॥ वैनतेयनिवासेनपापं सारयतो नु

किम् ॥ २५ ॥

अथपूर्वश्लोकेअणुवेदनास्विंतिपदेनमहतिदुःखेसति कथंविश्रांतिरित्याह परपातोयेरसःस्वादुतायस्याःसातोयरसा एवंविधापंपाकिंनास्ति अस्त्येवेत्यर्थः तथावैइतिनिश्चयेन नित्यानियतेनहनुमतासेवा किंनास्ति अस्त्येव एवमुभयथापिरामस्यविश्रांतिर्विरहदुःखेप्यासीदित्यर्थः अथकृष्णपक्षः ॥ गोप्यःउद्धवंपरिहसंति वैनतेयनिवासेनगरुडनिवासेनकृत्वा पापंसारयतोदूरीकुर्वतःपुरुषस्यकिंनुवाच्यमित्यध्याहारः कृष्णोपासनयानिष्पापस्त्वंकथमस्मान् प्रतारयसीतिसूचितं ॥ २५ ॥

स नतातपहा तेने स्वं शेनाविहिता
गसमाऽसंगताहिविनाशे स्वं नेतेहा
पततान सः ॥ २६ ॥

अथ वालिनाहृतदारःसुग्रीवोरामंशरणंप्रयात इत्याह सनतातपहारामःशेनस्वंतेने नतस्यन म्रस्य शरणागतस्यआतपंसंतापंहंतीति तथावि धोरामः शेनसुखेनस्वंतने आश्वासजनितसुखे नस्वंस्वकीयंसुग्रीवंतेनेविस्तारितवान् नविहितं नसंपादितं आगः अपराधोयेनतथानिरपराध त्वेनाविहितागसमिति सूचितमित्यर्थः ॥ अथ कृष्णपक्षः ॥ उद्धवःगोपिकांप्रतिकृष्णस्याश्रित पक्षपातंवदति सनेतानियंताकृष्णःइहसरस्वती तीरसंस्थानंनंदंसंकटकेआपप्रापतथा संगताहि विनाशेस्वंजनंततान संगतःप्राप्तःयोअहिःसर्प स्तस्य विनाशेकृतेसति स्वकीयंजनंगोकुलस्थ तंततानविस्तारयामास नंदंनिधनशंकयामुमूर्षुं विस्तारितवान् सकिंभवतीमुपेक्षतइति सूचितं ॥ २६ ॥

कपितालविभागेन योषादोऽनुनयेन स: ॥ सनयेन नु दोषायो नगेभाविलतापिक: ॥ २७ ॥

अथवालिनंहत्वासुग्रीवपत्नींमुमोचेत्याह स राम: अनुनयेनप्रीत्याकपितालविभागेन योषादोऽभूत्कपिर्वालीतालाश्चतद्वृक्षकास्तेषांविभागेन विच्छेदेनयोषांददातीतियोषाद: योषांसुग्रीवपत्नींदत्तवान् ॥ अथकृष्णपक्ष:॥ गोपिका वदंतिसकृष्ण:नयेनीतिमार्गेनास्ति नुइतिवितर्के किंतुदोषायोस्ति दोषाणांदु:खानां आय:प्राप्तिर्यस्मात्स तथा पुनरायारयतीतिचेन्न कुत: यथानगेभाविलतापिक:नगेपर्वतेभाविनीया लतावल्लीसहकारशाखातत्रपिक: पिकतुल्य:यथा यमसंभावितार्थ:तद्वदित्यर्थ: ॥ २७ ॥

ते सभा प्रकापिवर्णमालिका नाल्पक

प्रसरमभ्रकल्पिता ॥ तालिपकभ्रमर
सप्रकल्पना कालिमार्णव पिक प्रभा
सते ॥ २८ ॥

अथवालीपुत्रःअंगदोरामंप्रतिवदति भोराम
तेसभाप्रकपिऋर्णमालिकास्ति प्रकृष्टायेकपयो
वानरास्तेषांयेविचित्रवर्णास्तेषांमालायस्यांसा
तथानानाविधवानरश्रेणीसंपन्ना सातुअल्पक
प्रसरंयथाभवति तथाअल्पसंख्याका परंतुअभ्र
कल्पितानास्ति अभ्रंआकाशेमेघमंडलपर्यंतंवा
नास्ति अनेनरक्षःपंक्तिःआकाशेप्रकल्पितास्ती
त्यर्थः ॥ अथकृष्णपक्षः ॥ गोपिकास्तावदन्यो
पदेशेनपिकंप्रतिवदंति भोकालिमार्णवमालिन्य
समुद्रपिककोकिलत्वयितालिपकभ्रमरसप्रकल्प
नाप्रभासते तल्पेभवंतालिपकंसुरतंतस्यभ्रमस्त
त्रयोरसः सप्रभासतेस्वप्नेसुरतभ्रमेयोवान्रसः

सएवत्वयिभासते नसाक्षादस्मत्सुरतसुखंतत्तु तवस्वप्नेपिदुर्लभमित्यर्थः ॥ २८ ॥

रावणेऽक्षिपतनत्रपानते नाल्पकभ्रम
णमक्रमातुरम् ॥ रंतुमाक्रमणमभ्रक
ल्पनातेनपात्रनतपाक्षिणे वरा ॥२९॥

अथरावणोयद्यपिसकलसैन्यसन्नाहवानस्ति तथापितत्रवीरलक्षणंनास्तीत्याहरावणेअक्रमातुरंयथा भवतितथा अक्षिपतनत्रपानतेसतिअल्पकभ्रमणं नभविष्यति नक्रमःअक्रमःपरस्त्रीहरणादिकस्तेन आतुरंयथास्यात्तथा अक्षिपतनं रामस्यदृष्टिपातस्तेनयात्रपालज्जातया रावणेनम्रेसति पर्याकुलतया यद्भ्रमणंचित्तभ्रमः किंन भविष्यतिभूयादेव अहोवीरव्रतमतिक्रम्यपापं कृतवतोममजयोनास्त्येवेति लज्जयाकृत्वाचित्तस्यैव किंत्रासोनभविष्यतीत्यर्थः ॥ अथकृष्णा

पक्षः ॥ उद्धवोगोपिकाःप्रतिवदति भोगोप्यःते
नआक्रमणंदैत्यनिबर्हणादिकं तथाअभवत्कल्प
नामेघश्यामताचरंतु क्रीडार्थमवलंविताततस्या
न्येनेन तस्यनकिमपिप्रयोजनंतत्र तेनकारणेन
सामेघश्यामतापात्रनतपक्षिणेवरापात्रेनताःपा
त्रनताःपुरुषास्तेषांपक्षोयस्य सतत्पक्षीतस्मैकृ
ष्णायवराकल्पिता भक्तानांध्यानगोचरत्वाये
त्यर्थः तथाचभवतीनांध्यानयोगेनैव कृतार्थत्व
मस्तीति सूचितं ॥ २९ ॥

दैवे योगे सेवादानं शंका नायेलंकाया
ने॥नेयाकालं येनाकाशं नंदावासे गे
यो वेदैः ॥ ३० ॥

अथ सीताशुद्ध्यर्थमादिष्टोहनुमान् रामंप्रति
विद्युन्मालयाह अये श्रीराम लंकायाने लंकां
प्रतिगमने शंकानास्ति कुतः यतोदैवेयोगेसेवा

दानंजातमस्तिदेवसंबंधीदैवस्तस्मिन् तवयोगे यासेवावलंबितास्ति अतोलंकागमनेत्वत्सेवायाएवसामर्थ्यमित्यर्थः ॥ अथकृष्णपक्षः ॥ पुनरुद्धवःकृष्णंस्तौति सकृष्णःनंदावासेनंदव्रजेऽभूत्सक्तः येनआकाशंनेयाकालंनेतुं संहर्तुं योग्योनेयः आसमंतात् कलयतितत् एवंविधमाकाशीकालं आकाशादिकमपि संहर्तुं क्षमस्तत्रभवतनांसारःश्रमःक्रियानित्यर्थः किंभूतःवेदैःगेयःगातुं योग्यः ॥ विद्युन्मालाया लक्षणं ॥ मो मो गो गो विद्युन्माला ॥ ३० ॥

शंकावज्ञानुस्त्वनुज्ञावकाशं यानेन द्यामुग्रमुद्याननेया॥ याने नद्यामुग्रमुद्याननेया शंकावज्ञानुस्त्वनुज्ञावकाशम् ॥ ३१ ॥

अथजानकीशुद्धिं कृत्वापरावृत्ते।हनुमान्रामं

प्रतिवदतीति समाक्षरयाशालिन्याह हेरामसा
जानकोउग्रमतिक्लेशंयथाभवति तथानद्यां कु
त्यायांउद्यानेनेयाउद्यानेक्रीडावनेनेतुं योग्या
नेयाअस्ति तथासीताकृत्रिमसरिदुपकंठेउद्या
नेस्तीत्युक्तं इत्थंत्वंरावणस्य क्रीडावनंगंतुं क
थमवकाशंलब्धवानित्याह यानेप्रयाणकालेअ
नुज्ञावकाशंयथाभवतितथा शंकावज्ञानुतुभ्यं
मदनुज्ञालब्धावकाशत्वेन शंकावज्ञेनुदितेतथा
शंकाराक्षसभयंतत्कृतावज्ञा जंबूवनपालादि कृ
तातदुभयंमयानिराकृतमित्यर्थः ॥ अथकृष्णप
क्षः ॥ गोकुलात्परावृत्तउद्धवः कृष्णंप्रतिवदति
भोकृष्णउद्यानेनेयाकापिगोपिकानद्यां यानेउ
ग्रंअतिक्लेशंयथाभवति तथातिष्ठति या त्वया
पूर्वंस्कंधोपरिधृत्वा उद्यानंप्रतिप्रापितातर्हि त
स्यादयितदेवरादयः किंनसंतीत्याह हेकृष्णसा

गोपिका अहं पुनरागमिष्यामीति श्रीमदनुज्ञया लब्धावकाशं यथास्यात्तथा शंकावज्ञासतीतिष्ठ ति शंकायादयितभयंतस्य अवज्ञाअवगणना यस्याःसादयितदेवरादीनांशंकाभयं तथातत्कृ तविकाराद्यविगणय्यप्राणावशेषातिष्ठति एवंत यैकया विनाऽन्याः सर्वाअपिमयासंबोधिताइत्यु क्तंभवति ॥ ३१ ॥

वादिदेश द्विसीतायं यंपाथोयनसेत
वे ॥ वेतसेन यथोपायं यंतासीद्विश
देदिवा ॥ ३२ ॥

अथ समुद्रंनियम्यलंकांगंतुंशक्तोपिरामःक्षुद्र वानरकौतुकंद्रष्टुंसेतुबंधार्थमादिदेशेत्याह वे ति अथवासरामः यंकंचिद्वानरंपाथोयनसेतवे दिदेश पाथसामुदकानामयनंयस्मिन्पाथोयनः समुद्रस्तस्यसेतवेसेतुबंधायादिदेश आज्ञापया

मासक्किमर्थंपरंद्विसीतायंयथास्यात्तथा द्वयोःसी
तयोःसमाहारोद्विसीतं तस्यायः प्राप्तिः किंपुन
रेकसीतालब्धिः अपरंसेतुबंधाख्यं पुरुषार्थंसी
ताद्वयलाभोभविष्यतीत्युत्साहेनादिदेशेत्यर्थः॥
॥ अथकृष्णपक्षः ॥ कंसेहतेमातामहायोग्रसेना
यराज्यंदत्वास्वयंतत्सैन्यपतिर्बभूवेत्याह सकृ
ष्णः यथोपायं वेत्तसेनयंतासीत् यथोपायं राज
नीतिमनतिक्रम्यवेत्तसेनवेत्रधारत्वेननियंतासी
त् विशदेदिवासुमुहूर्तोपलक्षितेदिवादिवसे३२॥

वायुजोनुमतो नेमे संग्रामेऽरवितोऽ
न्हिवः ॥ वन्हितो विरमेग्रासं मेनेऽ
तोऽमनुजो युवा ॥ ३३ ॥

अथराक्षसैः सहसंग्रामोपस्थितः श्रीरामोह
नुमत्प्रशंसामाह हेवानराःवः इतियुष्माकंमध्ये
अरवितः अन्हिवासंग्रामेउपस्थितेसतिवायुजो

ऽनुमतःअस्तिनरविर्यस्मिंस्तत् अरत्रितस्मिन्
रात्रावित्यर्थः वाअन्हिदिवावासंग्रामेउपस्थिते
सतिहनुमानेव अनुमतः संमतः रात्रौदिवावा
मायाविभिःसहसंग्रामेवायुपुत्रएवनिर्वाहयिष्य
तीत्युक्तंभवति इमेसर्वेवानराःनानुमताःनसंम
ताः ॥ अथकृष्णपक्षः ॥ कंसादिहननेराज्यस्था
पनेवा कृष्णस्यकिंचित्रंवर्णनीयमित्याह अतः
परंयः त्रिरभेप्राप्तेसतिवन्हितः वन्हिमेवग्रासं
भक्षत्वेनोपस्थितंमेने अमनुजःदेवःसन्युवाप
राक्रमीतत्रनकिमपिचित्रमित्यर्थः ॥ ३३ ॥

क्षताय मा यत्र रघोरितायुरंकानुगान
न्यवयोऽयनानि ॥ निनाय योवन्यनगा
नुकारंयुतारिघोरत्रयमायताक्षः ॥ ३४ ॥

अथरामरावणयोर्युद्धप्रसंगे वानरैर्व्याकुलितो
रावणोरामेणसहनप्रभावमगादित्याह यत्र अं

कानुगाननयवयोयनानिसंतितत्रइताग्रुः रघोः क्ष
तायमाभूत् अंकंअनुगच्छंतितेअंकानुगाःशरणं
गतावानरास्तेष्वनन्यंवयःजन्मयेषांते अनन्यव
यसः सुग्रीवहनुमदादयस्तेषां अयनानिसंग्रामे
व्यूहप्रवेशपरिसरणानियत्र तत्रइतायुर्दशास्यः
रघोःरामचंद्रस्यक्षतायशस्त्रादिभिर्घाताय मान
समर्थोऽभूत् प्रथमतोवानरैरेवव्याकुलीकृतः रा
मेणसहयोद्धुमलब्धावकाशोऽभूदित्यर्थः ॥ अ
थकृष्णपक्षः ॥ वृन्दावनेकृष्णोदैत्यानवधीदि
त्युक्तं तत्रत्रयमतिभयानकंहतमित्याह यःआ
यताक्षःकृष्णःपुनारिघोरत्रयंमुक्तिंनिनाययुताः
योगंप्राप्ताश्चतेअरयश्चतेषु घोरत्रयंनिनायप्रापि
तवान् पूतनाअघासुरः केशीचेतिभयानकत्रयं
स्वांतिकेप्रापितमित्यर्थः अथभयानकमेवव्यन
क्ति किंभूतं घोरत्रयं वन्यनगानुकारं वनेस्थि

तःघन्यः सचासौनगःपर्वतस्तद्वदनुकारोयस्यसः तथाअतिप्रचंडमित्यर्थः ॥ ३४ ॥

तारके रिपुराप श्रीरुचा दाससुतान्वितः । तन्वितासु सदाचारु श्रीपरा पुरिके रता ॥ ३५ ॥

अथसपरिवारस्य रावणस्य तारकेपरब्रह्मणिप्रवेशोऽभूदित्याह रिपुःश्रीरुचातारकेआपरिपुः रावणः श्रीर्मोक्षलक्ष्मीः तस्याःरुग्दीप्तिःप्रकाशस्तेनेत्यर्थः किंभूतःदाससुतान्वितःदासाश्चकुम्भकर्णादयःसुता इन्द्रजिदादयस्तेसर्वेपितारकं प्रापुइत्यर्थः ॥ अथकृष्णपक्षः ॥ सदाचारुयथास्यात्तथातन्वितासुगोपीषुश्रीपरापुरिकेरता आसीत् तनुना शरीरेणइतासुप्राप्तासुगोपिकासुमध्येश्रियःलक्ष्म्याः पराश्रीपराद्वितीयलक्ष्मीरिवसैरंध्रीपुरिमथुरायां केपरब्रह्मणिकृष्णेरतासीत्

गोकुलेकृष्णविरहेणतदाध्याननीतासुसतीषुमथु
रायांकृष्णस्यसैरंध्रयासाकंगार्हस्थ्यमभूदित्यर्थः
॥ ३५ ॥

लंका रंकागाराध्यासं याने मेयाकारा
व्यासे ॥सेव्या राका यामेनेया संध्या
रागाकारं कालम् ॥ ३६ ॥

॥ इति दैवज्ञ सूर्यसूरिविरचितं रामकृष्ण ॥
॥ काव्यं समाप्तम् ॥

अथरावणेसपरिवारेहतेसतिलंकाहतप्रभाऽभू
दिति विद्युन्मालयाह यानेरामागमनेसतिलं
कारंकागाराध्यासंयथास्यात्तथामेयाऽभूत् लं
कानगरीरंकस्यागारंरंकागारंतस्य अध्यासोभ्र
मस्तेनज्ञातुंयोग्याभूत् इयंलंकातुकस्यचिद्रंक
स्य अगारमितिभ्रमेणज्ञाताभूदित्यर्थः कस्मिन्
सतिकाराव्यासेसतिकाराबंदीगेहं तस्य अव्यासे

अविस्तारेसति काराविस्तारंनिर्भिद्यबंदीभूते षुदेवेषुनिर्मोचितेषुसत्स्वित्यर्थः ॥ अथकृष्णप क्षः ॥ पूर्वंसैरंध्र्यासार्कंकृष्णस्य गार्हस्थ्यमभूत्त त्रदृष्टांतमाह सेव्यासेवितुंयोग्यासेव्या अतिरम णीयमभूदित्युक्तं सैरंध्रीयामेसंयोगावसरे का लंमेघश्यामं कृष्णंप्रतिनेयानेतुंयोग्यानेयाऽ भूत् अत्रयोग्यपदेनोभयोः संयोगे शोभातिश यःसूचितः काकमिव राकासंध्यारागाकारमिव पूर्णचन्द्रोदयोपलक्षितारकासंध्यारागाकारं प्रा प्य यथाशोभातिशयशालिनीभवतितद्वदित्य र्थः ॥ ३६ ॥

गोदावरीब्रह्मगिरेःसकाशात् संप्रापिता प्रागु दधिंप्रयत्नात् ॥ येनर्षिणा सोऽपिपुनः प्रतीप मानेतुमद्रिं प्रभवेत्किमेतां ॥ १ ॥ एवं विलो माक्षरकाव्यकर्तुर्भूयांसमायांसमवेक्ष्य तज्ज्ञाः ॥

ज्ञानंत्विमांचित्रकवित्वसीमां दैवज्ञसूर्याभिधसं
प्रदिष्टाम् ॥ २ ॥ श्रीमन्मंगलमूर्तिमार्तिशमनं
नत्वाविदित्वा ततः शब्दब्रह्म मनोरमं सुगणक
ज्ञानाधिराजात्मजः ॥ यद्ग्रंथाध्ययनैर्विनेय
निवहोऽप्याचार्यचर्यामगात् सोऽहं सूर्यकविर्वि
लोमरचनंकाव्यंकरोम्यद्भुतम् ॥ ३॥ छंदः पूर
णमुत्क्रमक्रमविधौसाकांक्षता तत्पदेष्वारंभाच्च
रिते क्रमोपिसुतरामेतत्त्रयंदुर्गमम् ॥ एवंसत्य
पि मन्मतिः क्रियदपि प्रागल्भ्यमालंबते तत्स
र्वंगुणिनः क्षमंतुयदहोयूयंप्रमज्ञाःस्वयम् ॥४ ॥
कदाचिदपिसंतरेत्कृतिपरोनरो नीरधिंकथंचिद
पिधावतिप्रवरधामधाराध्वनिः ॥ ऋतेऽप्यति
विशारदाप्रचुरशारदानुग्रहं विलोमकविताकृतौ
सुकविधीरधाराभवेत् ॥ ५ ॥ भागीरथीरामक
थातिरम्याकालिंदिकाकृष्णकथामनोज्ञा ॥ स

रस्वतीसूर्यकवेस्तृतीया स्नातुं प्रयागेऽत्रमतिः कवीनाम् ॥६॥ समाक्षरांघ्रिर्विषमाक्षरार्धाद्द्वेधा भवेद्व्यस्तकवित्वसीमा ॥ समानभिन्नार्थतया द्विधाद्याभिन्नाक्षरार्थाचभवेद्द्वितीया ॥ ७ ॥ अथकवित्वपरिभाषापिंगलादौकथिता। अध्याहारोयत्तदोर्वाक्रियायाः पादाद्यन्तेवाविसर्गोविसर्गः ॥ कुत्राप्यूह्यालक्षणाव्यंजनावाविद्याद्देतां चित्रकाव्यानुपूर्वीम् ॥ ८ ॥ नैकाक्षराणिछंदोक्तिर्नाप्रसिद्धाभिधानकं॥नैवव्याकरणक्लिष्टंद्राक्षापाकोऽत्रकेवलम् ॥ ९ ॥

॥ इति दैवज्ञसूर्य सूरि विरचिता रामकृष्ण ॥
॥ काव्यटीका समाप्ता ॥

